# षट्पञ्चाशिका
# श्रीवराहमिहिरात्मजपृथुयशसा विरचिता

## अध्याय १

### अथ होराध्यायः

प्रणिपत्य रविं मूर्ध्ना वराहमिहिरात्मजेन पृथुयशसा
प्रश्ने कृतार्थगहना परार्थमुद्दिश्य सद्यशसा  १

च्युतिर्विलग्नाद्धिबुकाच्च वृद्धिर्मध्यात्प्रवासोऽस्तमयान्निवृत्तिः
वाच्यः ग्रहैः प्रश्नविलग्नकालाद्गृहं प्रविष्टो हिबुके प्रवासी  २

यो यो भावः स्वामिदृष्टो युतो वा
सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः
पापैरेवं तस्य भावस्य दानि
निर्देष्टव्या पृच्छतां जन्मतो वा  ३

सौम्ये विलग्ने यदि वास्य वर्गे शीर्षोदये सिद्धिमुपैति कार्यम्
अतो विपर्यस्तमसिद्धिहेतुः कृच्छ्रेण संसिद्धिकरं विमिश्रम्  ४

होरास्थितः पूर्णतनुः शशांको जीवेन दृष्टो यदि वा सितेन
क्षिप्रं प्रनष्टस्य करोति लब्धिं लाभोपय तो बलवाञ्छुभश्च  ५

स्वांशे विलग्ने यदि वा त्रिकोणे स्वांशे स्थितः पश्यति धातुचिंताम्
परांशकस्थश्च करोति जीवं मूलं परांशोपगतः परांशम्  ६

धातुं मूलं जीवं त्रयो जराशौ युग्मे विन्द्यादेतदेव प्रतीपम्
लग्ने योंशस्तत्क्रमाद्गणय एव संक्षेपोऽयं विस्तरात्तत्प्रभेदः  ७

इति श्रीवराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
होराध्यायः प्रथमः

# अध्याय २

## गमागमाध्यायः

वृषसिंहवृश्चिकघटैर्विद्धि स्थानं गमागमौ न स्तः
न मृतं न चापि नष्टं न रोगशान्तिर्न चाभिभवः १

तद्विपरीतं तु चरैर्द्विशरीरैर्मिश्रितं फलं भवति
लग्नेन्द्वोर्वक्तव्यं शुभदृष्ट्या शोभनमतोऽन्यत् २

सुतशत्रुगतैः पापैः शत्रुर्मार्गान्निवर्तते
चतुर्थगैरपि प्राप्तः शत्रुर्भग्नो निवर्तते ३

झषालिकुंभककटा रसातले यदा स्थितः
रिपोःपराजयस्तदाचतुष्पदैः पलायनम् ४

चरोदये शुभः स्थितः शुभं करोति यायिनाम्
अशोभनैरशोभनं स्थिरोदयेऽपि वा शुभम् ५

स्थिरे शशीचरोदये न चागमो रिपोर्यदा
तदागमं रिपोर्वदेद्विपर्यये विपर्ययम् ६

स्थिरे तु लग्नमागते द्विरात्मके तु चन्द्रमाः
निवर्तते रिपुस्तदा सुदूरमागतोऽपि सन् ७

चरे शशी लग्नगतो द्विदेहः पथोऽर्द्धमागत्य निवर्तते रिपुः
विपर्यये चागमनं द्विधा स्यात्पराजयः स्यादशुभेक्षिते तु ८

अर्कार्किज्ञसितानामेकोऽपि चरोदये यदा भवति
प्रवदेत्तदाशुगमनं वक्रगतैर्नेति वक्तव्यम् ९

स्थिरोदये जीवशनैश्चरेक्षिते गमागमौ नैव वदेत्त पृच्छतः
त्रिपञ्चषष्ठा रिपुसङ्गमाय पापाश्चतुर्था विनिवर्तनाय १०

नागच्छति परचक्रे यदार्कचन्द्रौ चतुर्थभवनस्थौ
बुधगुरुशुक्रा हिबुके यदा तदा शीघ्रमायाति ११

मेषधनुःसिंहवृषा यत्युदयस्था भवन्ति हिबुके वा
शत्रुर्निवर्तति तदा ग्रहसहिता वा वियुक्ता वा १२

स्थिरराशौ यद्युदये शनिगुरुर्वा स्थितस्तदा शत्रुः
उदये रविर्गुरुर्वा चरराशौ स्यात्तदागमनम् १३

ग्रहः सर्वोत्तमबलो लग्नाद्यस्मिन् गृहे स्थितः
मासैस्तत्तुल्यसंख्याकैर्निवृत्तिं यातुरादिशेत् १४

चरांशस्थे ग्रहे तस्मिन् कालमेवा विनिर्दिशेत्
द्विगुणं स्थिरभागस्थे त्रिगुणं ह्यात्मकांशके १५

यातुर्विलग्नाज्ञामित्रभवनाधिपतिर्यदा
करोति वक्रमावृत्तेः कालान्तं ब्रुवते परे १६

उदयर्क्षाच्चन्द्रर्क्षं भवति च यावद्दिनानि तावद्भिः
आगमनं स्याच्छत्रोर्यदि मध्ये न ग्रहः कश्चित् १७

इति वराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
गमागमाध्यायो द्वितीयः

## अध्याय ३

### जयपराजयोऽध्यायः

दशमोदयसप्तमगाः सौम्या नगराधिपस्य विजयकराः
आरार्की ज्ञगुरुसिताः प्रभङ्गदौ विजयदा नवमे १

पौरास्तृतीयभवनाद्धर्माद्वा यायिनः शुभैः शुभदाः
व्ययदशमाये पापाः पुरस्य नेष्टाः शुभा यातुः २

नृराशिसंस्था ह्युदये शुभाः स्युर्व्ययायसंस्थाश्च यदा भवन्ति
तदाशु सन्धिं प्रवदेन्नृपाणां पापैर्द्विदेहोपगतैर्विरोधम्  ३

केन्द्रोपगताः सौम्याः सौम्यैर्दृष्टा नृलग्नगाः प्रीतिम्
कुर्वन्ति पापदृष्टाः पापास्तेष्वेव विपरीतम्  ४

द्वितीये वा तृतीये वा गुरुशुक्रौ यदा तदा
अश्वेवागच्छते सेना प्रवासो च न संशयः  ५

इति वराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
जयपराजयो नाम तृतीयोऽध्यायः

## अध्याय ४

### शुभाशुभलक्षणाध्यायः

केन्द्रत्रिकोणेषु शुभस्थितेषु पापेषु केन्द्राष्टमवर्जितेषु
सर्वार्थसिद्धिं प्रवदेन्नराणां विपर्यवस्थेषु विपर्ययः स्यात्  १

त्रिपञ्चलाभास्तमयेषु सौम्या लाभप्रदा नेष्टफलाश्च पापाः
तुलाथ कन्या मिथुनं घटश्च नृराशयस्तेषु शुभं वदन्ति  २

स्थानप्रदा दशमसप्तमगाश्च सौम्या पानार्थदाः स्वसुतलग्नगता भवन्ति
पापा व्ययायसहिता न शुभप्रदाः स्युर्लग्ने शशी न शुभदो दशमे शुभश्च  ३

इन्दुं द्विसप्तदशमायरिपुत्रिसंस्थ पश्येद्गुरुःशुभफलं प्रमादाकृतं स्यात्
लग्नत्रिधर्मसुतनैर्धनगाश्च पापाः कार्यार्थनाशभयदाः शुभदा शुभाश्च  ४

शुभग्रहाः सौम्यनिरोक्षिताश्च विलग्नसप्ताष्टमपञ्चमस्थाः
त्रिषट्दशाये च निशाकरः स्याच्छुभं भवेद्रोगनिपीडितानाम्  ५

इति वराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
चतुर्थोऽध्यायः

अध्यायः ५

प्रवासचिन्ताध्यायः

दूरगतस्यागमनं सुतधनसहजस्थितैर्ग्रहैर्लग्नात्
सौम्यैर्नष्टप्राप्तिं लघ्वागमन गुरुलिताभ्याम् १

जामित्रे त्वथवा षष्ठे ग्रहः केन्द्रेऽथ वाक्पतिः
प्रोषितागमनं विद्यात् त्रिकोणे ज्ञे सितेऽपि वा २

अष्टमस्थे निशानाथे कण्टकै पायवर्जितैः
प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः ३

पृष्ठोदये पापनिरीक्षिते वा पापास्तृतीये रिपुकेन्द्रगे वा
सौम्यैरदृष्टा वधबन्धदाः स्युर्नष्टा विनष्टा मुषिताश्च वाच्याः ४

ग्रहो विलग्नाद्यतमे गृहे तु तेनाहता द्वादश राशयः स्युः
तावद्दिनान्यागमनस्य विद्यान्निवर्तनं वक्रगतैर्ग्रहैस्तु ५

इति वराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
प्रवासचिन्ताध्यायः पञ्चमः

अध्याय ६

अथ नष्टप्राप्त्यध्यायः

स्थिरोदये स्थिरांशे वा वर्गोत्तमगतेऽपि वा
स्थित तत्रैव तद्द्रव्यं स्वकीयेनैव चोरितम् १

आदिमध्यावसानेषु द्रेक्काणेषु विलग्नतः
द्वारदेशे तथा मध्ये गृहान्ते च वदेद्धनम् २

पूर्णः शशी लग्नगतः शुभो वा शीर्षोदये सौम्यनिरीक्षितश्च
तष्टस्य लाभ कुरुते तदाशु लाभोदयातो बलवाञ्छुभश्च ३

दिग्वाच्या केन्द्रगतैरसंभवे वा वदेद्विलग्नर्क्षात्

मध्याच्चयुतैर्विलग्नान्नवांशकैर्योजना वाच्या ४

अंशकाज्ज्ञायते द्रव्यं द्रेष्काणैस्तस्कराः स्मृताः
राशिभ्यः कालदिग्देशा वयो जातिश्च लग्नपात् ५
इति वराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
नष्टप्राप्त्यध्यायः षष्ठः

## अाध्याय ७

## अथ मिश्रकाध्यायः

विषमस्थितेऽर्कपुत्रे सुतस्य जन्मान्यथाङ्गनायाश्च
लभ्या वरस्य नारी समस्थितेऽतोऽन्यथा वामम् १

गुरुरविसौम्यैर्दृष्टस्त्रिसुतमदायारिगः शशी लग्नात्
भवति च विवाहकर्ता त्रिकोणकेन्द्रेषु वा सौम्याः २

चन्द्रार्कयोः सप्तमगौ सितार्की सुखेऽष्टमे वापि तथा विलग्नात्
द्वितीयदुश्चिक्यगतौ तथा च वर्षासु वृष्टिं प्रवदेन्नराणाम् ३

सौम्या जलराशिस्थास्तृतीयधनकेन्द्रगाः सिते पक्षे
चन्द्रे वाप्युदयगते जलराशिस्थे वदेद्वर्षम् ४

पुंवर्गे लग्नगते पुंग्रहदृष्टे बलान्विते पुरुषः
युग्मे स्त्रीग्रहदृष्टे स्त्रीबुधयुक्ते तु गर्भयुता ५

कुमारिकां बालशशी बुधश्च वृद्धां शनिःसूर्यगुरू प्रसूताम्
स्त्रीं कर्कशां भौमसितौ विधत्त एवं वयः स्यात्पुरुषेषु चैवम् ६

अात्मसमंलग्नगतैर्भ्राता सहजस्थितैः सुतः सुतगैः
माता वा भगिनी वा चतुर्थगैः शत्रुगै शत्रुः ७

भार्या सप्तमसंस्थैर्नवमे धर्माश्रितो गुरुदशमे

स्वांशपतिमित्रशत्रुषु तथैव वाच्यं बलयुतेषु  ८

चरलग्ने चरभागे मध्याद्भ्रष्टे प्रवासचिन्ता स्यात्
भ्रष्टः सप्तमभवनात्पुनर्निवृत्तो यदि न वक्री  ९

अस्ते रविसितवक्रैः परजायां स्वां गुरौ बुधे वेश्याम्
चन्द्रे च वयः शशिवत्प्रवदेत्सौरेऽन्त्यजातीनाम्  १०

मन्दः पापसमेतो लग्नान्नवमेऽशुभैर्युतदृष्टः
रोगार्तः परदेशे चाष्टमगो मृत्युकर एव  ११

सौम्ययुतोऽर्कः सौम्यैः सन्दृष्टश्चाष्टमर्क्षसंस्थश्च
तस्माद्देशादन्यं गतः स वाच्यः पिता तस्य  १२

इति वराहमिहिरात्मजपृथुयशोविरचितायां षट्पञ्चाशिकायां
मिश्रकाध्यायः सप्तमः
षट्पञ्चाशिका समाप्ता